श्रीः।

# अष्टादशस्मृतयः।

ताश्च

[१ अत्रिस्मृतिः, २ विष्णुस्मृतिः, ३ हारीतस्मृतिः, ४ औशनसी स्मृतिः, ५ आङ्गिरसस्मृतिः, ६ यमस्मृतिः, ७ आपस्तम्बस्मृतिः, ८ संवर्त्तस्मृतिः, ९ कात्यायनस्मृतिः, १० बृहस्पतिस्मृतिः, ११ पाराशरस्मृतिः, १२ व्यासस्मृतिः, १३ शंखस्मृतिः, १४ लिखितस्मृतिः, १५ दक्षस्मृतिः, १६ गौतमस्मृतिः, १७ शातातपस्मृतिः, १८ वसिष्ठस्मृतिः]

सोऽयं ग्रन्थः

मुम्बय्यां

क्षेमराज-श्रीकृष्णदासश्रेष्ठिना

स्वकीये "श्रीविङ्कटेश्वर" स्टीम् यंत्रालये

मुद्रयित्वा प्रकाशितः।

संवत् १९८१, शके १८४६.

इस पुस्तकको खेमराज श्रीकृष्णदासने बम्बई खेतवाडी ७ वीं गली खम्बाटा लेन निज "श्रीवेंकटेश्वर" स्टीम् प्रेसमें अपने लिये छापकर यहीं प्रकाशित किया.

# भूमिका ।

श्रुतिः स्मृतिश्च विप्राणां नयने द्वे प्रकीर्तिते ।
काणः स्यादेकया हीनो द्वाभ्यामन्धः प्रकीर्तितः ॥

इह हि परिवर्तिनि संसारेऽजस्रमेव शरीरिणाञ्जननिधने जायेते । कर्मानुगो हि जीवः स्वसुखदुःखयोः परवानपि धर्मैकप्रवणः प्रभवति स्वाभ्युदयायेति निर्विवादम् ।

यद्यपि जन्मिमात्रः स्वस्वधर्मानुरूपमधिकारी धर्माचरणे तथापि धर्मशास्त्राध्ययने तद्विहितधर्मानुष्ठाने च द्विजातिरेवाधिक्रियते । यथाह योगीश्वरः—"निषेकादिः श्मशानान्तो मन्त्रैर्यस्योदितो विधिः । तस्य शास्त्रेऽधिकारोऽस्मिन्सम्यङ् नान्यस्य कस्यचित् ॥" इति ।

उपनयनानन्तरमेव हि ब्रह्मचर्याश्रमे गायत्रीजपाग्निगुरुशुश्रूषाश्रुतिपरिशीलनादिब्रह्मचारिनियमाः, गृहस्थाद्याश्रमनियमाश्च ऋते धर्मशास्त्रान्न विज्ञायन्ते । प्राधान्यतश्चात्र धर्मशब्दः षड्विधधर्मपरः । स च-वर्णधर्मः, आश्रमधर्मः, वर्णाश्रमधर्मः, गुणधर्मः, निमित्तधर्मः, साधारणधर्मश्चेति । "स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ॥" इत्यादिश्रीभगवद्वचोऽनुरोधाद्द्विजातिभिस्तदपरैरपि यथाशक्ति स्वस्वधर्मानुष्ठानं विधेयमेव, अतएव परमकृपाकूपार महर्षिमन्वादिभिर्वर्णाश्रमधर्मबोधनाय स्वस्वनाम्ना धर्मशास्त्राणि निरमीयन्त, यतश्च किलातिपावनेऽस्मिन्भारते वर्षे द्विजत्व-

सम्मतिप्राप्तिदिवसादेवावहिता आचार्याः स्वस्वबटून्धर्मपटून्विधातुं धर्मशास्त्रानुसारं समादिशन् ।

तेषामाह्निककृत्ये धर्मशास्त्रानुकूलमेव कर्मणां सन्निवेशान्तवतो हि जागरूकता धर्मशास्त्रस्यासीत्। साम्प्रतं तु कलिमहिम्ना सुदूरमपास्ता सा द्विजानां दैनिकी क्रिया, तत एव दुर्दैवाद्द्विजा धर्मशास्त्रपरिशीलने मन्दोत्साहाः समभवन् ।

मा चैव धर्मशास्त्रावहेलनं भवेद्द्विजाश्च भूयोऽपि धर्मशास्त्राध्ययनाध्यापनादिना स्वर्णाश्रमाचारं पालयन्तूपदिशन्तु च तदधिकारिण इति धियातिस्वल्पमूल्यतो वशिष्ठाद्यष्टादशस्मृतिग्रन्थमेनं विक्रेतुमुद्युक्तोऽहं सविनयं निवेदयामि सर्वे एव धार्मिकाद्विजादयोऽमूल्यमेनं ग्रन्थं समुपलभ्य विशीर्णप्रायं धर्मं गोपायन्तु समुद्धरन्तु च सुकृतप्रसूं सपस्विनीमिमां भारतभुवमिति ।

श्रीकृष्णदासात्मजः

क्षेमराजो मुम्बईस्थः

"श्रीवेंकटेश्वर" स्टीम् यन्त्रालयाधिपतिः ।

श्रीः ।

# अथाष्टादशस्मृति विषयानुक्रमणिका ।




| विषयाः । | पृष्ठांकाः । |
|---|---|
| **अत्रिस्मृतिः १.** | |
| लोकहिताय ऋषीणां धर्मविषयकप्रश्नं श्रुत्वा अत्रिमहर्षिप्रणीतस्य स्मृतिनामकधर्मशास्त्रस्य प्रारंभः, स्मृतिश्रवणफलं च ... | १ |
| स्वकर्मानुष्ठानतो लोकप्रियत्वं वर्णचतुष्टयस्य कर्मवृत्तिकथनं च ... | २ |
| वर्णचतुष्टयस्य पातित्यकारकक्रियाकथनम् ... | ३ |
| राज्ञः परमहितकरक्रियानिरूपणम्, मलशुद्धिनिरूपणम्, ब्राह्मणलक्षणकथनं च | ४ |
| शौचादिलक्षणम्, उक्तलक्षणलक्षितस्य द्विजस्य पुनर्जन्माभावः, ब्राह्मणैककर्तव्येष्टापूर्तफलं च | ५ |
| इष्टापूर्तवर्णनम्, यमादिनिरूपणं च ... | ६ |
| पुत्रप्रशंसनम्, आहारशुद्धिकथनं च .. | ७ |
| प्रमादात्संध्योल्लंघने प्रायश्चित्तम् उच्छिष्टाद्यन्नभोजने प्रायश्चित्तम् ... | ८ |
| शवदूषितगृहशुद्धिनिरूपणम् | ९ |
| सूतकनिर्णयः ... ... | १० |
| परिवेदनदोषाभावनिरूपणम् | १२ |
| महापातकनाशनातिकृच्छ्रादिकथनम् ... | १३ |
| स्त्रीशूद्राणां पतनकरकर्मकथनम् ... ... | १५ |
| भोजने निषिद्धपात्राणि ... | १७ |
| षड् भिक्षुकाः, रजकादीनामन्नभक्षणे प्रायश्चित्तम् | १८ |
| दूषितान्नभक्षणे प्रायश्चित्तम् | १९ |
| म्लेच्छादिसंपर्के प्रायश्चित्तम् | २० |

| विषयाः। | पृष्ठांकाः। |
|---|---|
| स्त्रीणां सदा दूषणाभावः ... | २१ |
| मद्यसंपर्कदूषितस्य जलादेः शोधनम् ... ... | २२ |
| ब्रह्मदण्डहतानां आत्मघातिनश्च अशौचादिविचारः | २३ |
| गोहनने प्रायश्चित्तम् ... | २४ |
| पयसः शुद्धिकरणम् ... | २५ |
| स्पृष्टास्पृष्टदोषविचारः ... | २६ |
| ब्राह्मणस्य शूद्रोदकपाने प्रायश्चित्तम् ... ... | २७ |
| पतितान्नचांडालीगमनादि प्रायश्चित्तम्... ... | २८ |
| पशुवेश्यादिगमने प्रायश्चित्तम् | २९ |
| रजस्वलानां परस्परस्पर्शादौ प्रायश्चित्तम् ... | ३० |
| शद्रब्रह्महत्याप्रायश्चित्तम्, बिडालाद्युच्छिष्टान्नभोजने खरादियानगमे च प्रायश्चित्तम् ... | ३१ |
| अभक्ष्यान्नभक्षणे प्रायश्चित्तम् | ३२ |
| अमंगलपदार्थसेवनादिनिषेधः | ३३ |

| विषयाः। | पृष्ठांकाः। |
|---|---|
| मौनस्थानानि, मौनफल कथनं च ... ... | ३४ |
| नानाविधदानफलानि ... | ३५ |
| दानयोग्यब्राह्मणकथनम् ... | ३६ |
| श्राद्धकालाः, श्राद्धदानप्रशंसनं तत्फलं च ... | ३८ |
| दशविधा ब्राह्मणाः ... ... | ३९ |
| पूजनानर्हद्विजनिरूपणम् .. | ४१ |
| अत्रिस्मृत्युक्तधर्मनिर्णयश्रवणफलम् ... ... | ४२ |

## विष्णुस्मृतिः २.

### अध्यायः १.

| | |
|---|---|
| ऋषीणां विष्णवे धर्मविषयकप्रश्नः ... ... | ४३ |
| विष्णुप्रणीतधर्मेषु गर्भाधानादिसंस्काराः .. ... | ४४ |
| उपनयनानंतरं ब्रह्मचारिनियमाः ... ... | ४५ |

विषयाः। पृष्ठांकाः।

अध्यायः २.

गृहस्थधर्माणां संक्षेपतो निर्णयः ४६

अध्यायः ३.

वानप्रस्थधर्मनिरूपणम् ४८

अध्यायः ४.

यतिधर्मनिरूपणम् ... ५०

अध्यायः ५.

सामान्यतो वर्णचतुष्टयस्य धर्मकथनम् ... ५३

## हारीतस्मृतिः ३.

अध्यायः १.

हारीतस्य मुनिभिः सह संवादे द्विजाचारः ५६

अध्यायः २.

क्षत्रियादीनामाचारकथनम् ५९

अध्यायः ३.

उपनीतस्य गुरुकुलेषु वसतो बटोराचारः ... ६१

विषयाः। पृष्ठांकाः।

अध्यायः ४.

विस्तरेण गृहिणः सदाचारनिरूपणम् ... ६३

अध्यायः ५.

वानप्रस्थधर्माः ७१

अध्यायः ६.

चतुर्थाश्रमधर्मप्रणयनम् ७२

अध्यायः ७.

संक्षेपेण योगशास्त्रसारकथनम् ... ... ७५

## औशनसीस्मृतिः ४.

वर्णचतुष्टयतः प्रतिलोमानुलोमविधिनोत्पन्नानां वृत्तिधर्माणां संक्षेपेण कथनम् ७८

## आंगिरसस्मृतिः ५.

वर्णानामानुपूर्व्येण प्रायश्चित्तविधेः कथा ... ८४

विषयाः । पृष्ठांकाः ।

## यमस्मृतिः ६.

महापातकोपपातकादीनां वर्ण-क्रमेण संक्षेपतः प्राय-श्चित्तविधिकथनम् ९२

## आपस्तंबस्मृतिः ७.

### अध्यायः १.

आपस्तंबऋषिं प्रति प्रमादा-दकामतो बालगवादीनां विपत्तिदाने कथं निष्कृ-तिरिति मुनिकृतप्रश्नः १०२

### अध्यायः २.

जलशोधनप्रकारः १०६

### अध्यायः ३.

अज्ञानतोऽन्त्यजातिगृहनिवासे गृहपतेः प्रायश्चित्तम् बाल वृद्धादीनां पापनिवार-णाय प्रायश्चित्तव्यवस्था-निरूपणम् ... १०८

### अध्यायः ४

चंडालकूपभांडेषु जलपाने प्रतिवर्णं प्रायश्चित्तम् १०९

### अध्यायः ५.

चाण्डालस्पर्शे उच्छिष्टाशनादौ च प्रायश्चित्तम् ... १११

### अध्यायः ६.

नीलीवस्त्रसंबंधेन प्रायश्चित्तम् ११२

### अध्यायः ७.

रजस्वलाशुद्धिनिरूपणम् ११३

### अध्यायः ८.

कांस्यादिपात्रशुद्धिः शूद्रान्न-सेवनतः शुद्धिकथनम् ११६

### अध्यायः ९.

भुंजानस्य शूद्रस्पर्शने प्राय-श्चित्तम्. अलेह्यापेयाभक्ष्य-रेतोमूत्रादीनां भक्षणे प्रायश्चित्तम् ... ११८

### अध्यायः १०.

क्षमाशीलस्य क्रोधरहितस्या-वश्यं मोक्षः ... १२२

विषयाः। पृष्ठांकाः।

## संवर्तस्मृतिः ८.

ब्रह्मचारिणोऽवश्यकर्तव्य-
कथनम् ... १२५
गृहधर्मिणः कर्तव्यधर्मप्रणय
नम् ... ... १२८
तृतीयचतुर्थाश्रमयोः संक्षेपतो
धर्मकथनम् ... १३५
ब्रह्मघ्नस्य प्रायश्चित्तनिरूप-
णम् ... ... १३६
सुरापानादिमहापातकोपपा-
तकानां शुद्धिः ... १३७

## कात्यायनस्मृतिः ९.

प्रथमः खण्डः।

यज्ञोपवीतनिर्माणप्रकारः,
वृद्धौ पूज्यानां देवतानां
नामानि, वसोर्धारावृद्धि-
श्राद्धसंबंधविचारः १४९

द्वितीयः खण्डः।

वृद्धिश्राद्धे विशेषकथनम् १५१

विषयाः। पृष्ठांकाः।

तृतीयः खण्डः

वृद्धिश्राद्धविधानकथनम् १५२

चतुर्थः खण्डः।

पिण्डदानादिविधिकथनम् १५४

पंचमः खण्डः।

वृद्धिश्राद्धकरणेन क्रियमाण·
संस्कारसांगता ... १५५

षष्ठः खण्डः।

अग्न्याधानकालनिर्णयः १५७

सप्तमः खण्डः।

अरणिद्वयविचारः ... १५८

अष्टमः खण्डः।

अरणितोऽग्नेर्निष्कासनप्रकारः,
स्रुवप्रमाणम्, समित्प्रमाण-
कथनञ्च ... ... १६०

नवमः खण्डः।

होमकालकथनम्, असमि-
द्धाग्नौ होमे दोषकथनञ्च १६२

दशमः खण्डः।

प्रातःस्नानसंबंधेन जलादीनां
विचारः ... ... १६४

| विषयाः । | पृष्ठांकाः । |
|---|---|
| **एकादशः खण्डः ।** | |
| संध्योपासनविधिनिरूपणम् | १६६ |
| **द्वादशः खण्डः ।** | |
| पितृतर्पणाविधिः ... | १६८ |
| **त्रयोदशः खण्डः ।** | |
| पञ्चमहायज्ञविधिकथनम् | १६९ |
| **चतुर्दशः खण्डः ।** | |
| पृथिव्यादिभ्योऽन्नप्रदानम्, अग्निप्रार्थनादिकञ्च | १७० |
| **पंचदशः खण्डः ।** | |
| ब्रह्मणे दक्षिणादानमानम् आज्यस्थाल्यादिमानं च | १७२ |
| **षोडशः खण्डः ।** | |
| अन्वाहार्याग्रहायण्यादिषु पितृयज्ञादिकथनम् | १७५ |
| **सप्तदशः खण्डः ।** | |
| पितृयज्ञविधिनिरूपणम् | १७७ |
| **अष्टादशः खण्डः ।** | |
| दर्शपौर्णमासादिषु होमादिविचारः ... | १८० |
| **एकोनविंशः खण्डः ।** | |
| पतिप्रवासेऽग्निपरिचरणे स्त्रीणामधिकारस्तासां महत्त्ववर्णनप्रसंगेन अग्निसेविनः प्रशंसनम् | १८१ |
| **विंशः खण्डः ।** | |
| पुनराधानाग्निसमारोपणादिविचारः ... | १८४ |
| **एकविंशः खण्डः ।** | |
| गृहपतिमरणे तद्दाहव्यवस्थादिकथनम् ... | १८६ |
| **द्वाविंशः खण्डः ।** | |
| शवस्पृशां श्मशानात्पुनः परावर्तनम्... ... | १८८ |
| **त्रयोविंशः खण्डः ।** | |
| आहिताग्नेः परदेशमरणे व्यवस्थाकथनम्, आहिताग्निस्त्रीमरणे दाहादिकथनञ्च | १८९ |
| **चतुर्विंशः खण्डः ।** | |
| सूतके कर्मणां त्यागः, षोडशश्राद्धविधिश्च | १९१ |

| विषयाः। | पृष्ठांकाः। |
|---|---|
| **पञ्चविंशः खण्डः।** | |
| ब्रह्मदण्डादियुक्तानां बहिः संस्काराभावे कर्तव्य विधिःब्रह्मचारिव्रतकर्तव्यतातीतानां संस्काराणां प्रायश्चित्तपुरःसरं पुनः संस्कार कथनम् ... | १९२ |
| **षड्विंशः खण्डः।** | |
| वृषोत्सर्जनादौ स्मशनीयचरोर्निर्वापादिकथनम् | १९४ |
| **सप्तविंशः खण्डः।** | |
| अन्वाहार्यविधिकथनम् | १९६ |
| **अष्टाविंशः खण्डः।** | |
| उपाकृत्य उपगमने अध्ययनादिविचारः | १९८ |
| **एकोनत्रिंशः खण्डः।** | |
| दर्भकूर्चतः पशोः स्रोतसां क्षालनादिविचारः | २०० |

| विषयाः। | पृष्ठांकाः। |
|---|---|
| **बृहस्पतिस्मृतिः१०.** | |
| बृहस्पतिदेवेन्द्रसंवादे भूदानस्यातिप्रशंसनम् | २०३ |
| पुत्रकर्तव्येषु मध्ये गयागमनस्य नीलवृषोत्सर्जनस्य च पितृसन्तोषकरत्वकथनम् | २०५ |
| स्वदत्तपरदत्तायाभूमेर्हरणादाभूतसंप्लवं नरके निवासः | २०७ |
| ब्रह्मस्वहरणेन सर्वस्वविनाशः | २०८ |
| पात्रेषु गोहिरण्यवस्त्रान्नमहीतिलवितरणात्सर्वपातकविनाशः वापीकूपतडागोद्यानोपवनपुनःसंस्करणे मुक्तिलाभः, अन्नदानप्रशंसनञ्च ... ... | २०९ |
| ब्रह्मघातकविचारः, फलमूलाशनादिव्रतफलकथनञ्च | २१० |
| **पाराशरस्मृतिः११.** | |
| **अध्यायः १.** | |
| व्यासेन सह मुनीनां बदरि- | |

| विषयाः । | पृष्ठांकाः । |
|---|---|
| काश्रमे पराशरसमीपगमनम्, पराशरंप्रति व्यासस्य कलौ चातुर्वण्यसंपादनीयधर्मविषयकः प्रश्नः षट्कर्मकारिणो देवतातिथिपूजकस्य सदा सौख्यलाभः, अतिथिसत्कार कथनम्, सामान्यतोवर्णचतुष्टयस्य कर्मकथनम् | २१२ |

अध्यायः २.

| विषयाः । | पृष्ठांकाः । |
|---|---|
| कलावावश्यकसाधारण वर्णचतुष्टयगृहस्थाचार कथनम् ... ... | २२० |

अध्यायः ३.

| विषयाः । | पृष्ठांकाः । |
|---|---|
| जननमरणाशौचशुद्धिकथनं वर्णचतुष्टयस्य ... | २२२ |

अध्यायः ४.

| विषयाः । | पृष्ठांकाः । |
|---|---|
| उद्बंधनेन स्त्रीपुरुषयोर्मरणे बहुकालं नरके निवासः, गवादिहतानां द्विजशवानां दाहतप्त कृच्छ्रम् सप्तकृच्छ्र- लक्षणम् परिवेदनादिदोषस्तच्छुद्धिविचारश्च | २२७ |

अध्यायः ५.

| विषयाः । | पृष्ठांकाः । |
|---|---|
| वृकश्वानादिदष्टानां शुद्धिकथनम्, चंडालादिहतब्राह्मणदेहस्पर्शे प्रायश्चित्तम्, आहिताग्नेर्देशांतरमरणे व्यवस्था | २३१ |

अध्यायः ६.

| विषयाः । | पृष्ठांकाः । |
|---|---|
| संक्षेपेण प्राणिहत्यानिष्कृतिनिरूपणम् ... ... | २३३ |

अध्यायः ७.

| विषयाः । | पृष्ठांकाः । |
|---|---|
| दार्वादिपात्रशुद्धिः, वृषलीपतित्वे दोषमुक्त्वा प्रायश्चित्तकथनम्, रजस्वलास्पर्शादिषु प्रायश्चित्तकथनञ्च ... ... | २४१ |

अध्यायः ८.

| विषयाः । | पृष्ठांकाः । |
|---|---|
| बंधनयोक्त्रेषु गवामकामतो | |

| विषयाः। | पृष्ठांकाः। |
|---|---|
| मृत्यौ प्रायश्चित्तम् | २४६ |
| **अध्यायः ९.** | |
| संरक्षणार्थं गवां रोधबन्धनादिभिर्नाशे न दोषः, अन्यप्रकारेण गोवधे प्रायश्चित्तम्, प्रायश्चित्ताकरणे नरकप्राप्तिश्च ... | २५१ |
| **अध्यायः १०.** | |
| अगम्यागमने चातुर्वर्ण्येषु हिता निष्कृतिः ... | २५८ |
| **अध्यायः ११.** | |
| अमेध्यरेतोगोमांसादिभक्षणे प्रायश्चित्तम् शूद्राद्यन्नभोजने प्रायश्चित्तम् | २६२ |
| **अध्यायः १२.** | |
| विण्मूत्रादिभक्षणे प्रायश्चित्तम्, ब्रह्महत्यादिप्रायश्चित्तम् | २६८ |

| विषयाः। | पृष्ठांकाः। |
|---|---|
| **व्यासस्मृतिः १२.** | |
| **अध्यायः १.** | |
| वेदोक्तकर्मप्रचारभूमिकथनम्, षोडशसंस्कारसंज्ञाकालकथनम्, ब्रह्मचारिधर्मनिरूपणञ्च | २७७ |
| **अध्यायः २.** | |
| द्वितीयाश्रमवतो द्विजस्याचारवर्णनम्, स्त्रीधर्मनिरूपणम्, पतिव्रतास्त्रीपरित्यागे दोषकथनञ्च | २८१ |
| **अध्यायः ३.** | |
| गृहस्थस्य नित्यनैमित्तिककाम्यकर्मनिरूपणम् | २८७ |
| **अध्यायः ४.** | |
| गृहस्थाश्रमप्रशंसनम्, वर्णानां दानधर्मनिरूपणञ्च | २९४ |
| **शंखस्मृतिः १३.** | |
| **अध्यायः १.** | |
| वर्णचतुष्टयस्य कर्मनिरूपणम् | ३०२ |

| विषयः । | पृष्ठांकाः । |
|---|---|
| **अध्यायः २.** | |
| संस्कारकालनिर्णयः | ३०४ |
| **अध्यायः ३.** | |
| पित्रोपनीतस्य द्विजस्य वेदस्वीकरणव्रतनियमकथनम् | ३०५ |
| **अध्यायः ४.** | |
| अष्टविधविवाहकथनम्, वर्णचतुष्टयस्य स्त्रीस्वीकरणम् | ३०७ |
| **अध्यायः ५.** | |
| पंचसूनानिवृत्तये पंचमहायज्ञकथनम्, अतिथिपूजनाग्निहोत्राभ्यां गृहधर्मिणः साफल्यकथनञ्च | ३०९ |
| **अध्यायः ६.** | |
| द्विजस्य वयसस्तृतीयभागे वनाश्रयणं तद्धर्मकथनञ्च | ३११ |
| **अध्यायः ७.** | |
| ब्रह्मप्राप्तये चतुर्थाश्रमस्वीकारोत्तरं सदाचारनिर्णयः, अष्टांगयोगसाधनकथनम्, ध्यानयोगनिरूपणञ्च | ३१२ |
| **अध्यायः ८.** | |
| नित्यनैमित्तिकादिषड्विधस्नाननिरूपणम् | ३१५ |
| **अध्यायः ९.** | |
| विधिपूर्वकं क्रियास्नाननिरूपणम् | ३१७ |
| **अध्यायः १०.** | |
| शुभकराचमनक्रियाविधिकथनम् | ३१९ |
| **अध्यायः ११.** | |
| शतरुद्रियत्रिसुपर्णगोसूक्तजपफलकथनम् | ३२१ |
| **अध्यायः १२.** | |
| गायत्रीमन्त्रजपफलकथनम् | ३२२ |

| विषयाः । | पृष्ठांकाः । |
|---|---|
| **अध्यायः १३** | |
| तर्पणविधिनिरूपणम् | २२४ |
| **अध्यायः १४** | |
| दैवे कर्मणि ब्राह्मणपरीक्षणं पित्र्यकर्मण्यवश्यं परीक्षणम्, पंक्तिदूषकब्राह्मणकथनपूर्वकं पंक्तिपावनस्वकथनम्, श्राद्धकालदेशादिकथनञ्च | २२६ |
| **अध्यायः १५** | |
| सपिण्डानां जननमरणाशौचविचारः | २२९ |
| **अध्यायः १६.** | |
| पात्रशौचकर्मनिरूपणम्, मूत्रपुरीषकरणोत्तरं शुद्धिकथनम् | २३२ |
| **अध्यायः १७.** | |
| ब्राह्मणगोघ्नसुरापादीनां शुद्ध्यर्थं प्रायश्चित्तविधिः | २३५ |
| **अध्यायः १८.** | |
| अघमर्षणप्राजापत्यादिविवरणम् | २४२ |
| **लिखितस्मृतिः १४.** | |
| द्विजातीनां सामान्यधर्मेषु इष्टापूर्तकथनम्, श्राद्धकालदेशविचारः सामान्यतो द्विजाचारकथनम्, प्रायश्चित्तविधिकथनञ्च | २४४ |
| **दक्षस्मृतिः १५.** | |
| **अध्यायः १.** | |
| द्विजपुत्रस्याष्टवर्षपर्यंतं भक्ष्याभक्ष्यादिषु दोषाभावकथनम्, तदूर्ध्वमाश्रमराहित्ये दोषकथनम्, आश्रमलक्षणकथनञ्च | २५२ |
| **अध्यायः २.** | |
| दिने दिने प्रातरुत्थाय द्विजस्यावश्यकर्त्तव्यानां कथनम् | २५५ |

विषयाः । पृष्ठांकाः ।

अध्यायः ३.

सुधेषद्दानकर्मविकर्मादि विचारनिरूपणम् ३६१

अध्यायः ४.

अनुकूलकलत्रस्य गार्हस्थ्यं सुखकरमिति स्त्रीविषयकविचारः ३६५

अध्यायः ५.

शौचाशौचविषये संक्षेपेण विचारः ३६७

अध्यायः ६.

जन्ममृत्युनिमित्तकाशौचनिर्णयः ३६९

अध्यायः ७.

षडंगयोगस्य संक्षेपतो विवरणम् ३७१

गौतमस्मृतिः १६.

अध्यायः १.

वर्णत्रयस्योपनयनकालमौंजीदंडादिविचारः, गुरोः सकाशाद्ब्रह्मग्रणहनियमकथनञ्च ३७८

अध्यायः २.

उपनयनात्पूर्वं शौचाचारनियमाभावकथनम्, उपनयनोत्तरे प्रतिपालनीय नियमकथनञ्च ३८०

अध्यायः ३.

नैष्ठिकब्रह्मचारिणो नियमकथनम् ३८२

अध्यायः ४.

अनुलोमप्रतिलोमोत्पन्नवर्णचतुष्टयजातिनिरूपणम् ३८३

अध्यायः ५.

दारपरिग्रहोत्तरं कर्तव्यधर्मकथनम् ३८४

अध्यायः ६.

अभिवादनविषये विचारः ३८५

अध्यायः ७.

आपत्कल्पो ब्राह्मणस्य निरूप्यते ३८६

| विषयाः। | पृष्ठांकाः। |
|---|---|
| **अध्यायः ८.** | |
| गर्भाधानादिचत्वारिंशत्सं-स्कारयुक्तस्य द्विजस्य कृतापराधस्यापि न वधबंधादिदंडाधिकारः, तस्यैव ब्रह्मणः सालोक्यादिलाभश्च | ३८७ |
| **अध्यायः ९.** | |
| दारपरिग्रहोत्तरं द्विजस्यावश्यपालनीयव्रतकथनम् | ३८८ |
| **अध्याय १०ः.** | |
| वर्णचतुष्टयस्योपजीविकाकथनम् | ३९१ |
| **अध्यायः ११.** | |
| राज्ञः सदा शक्तिमतः सदाचारनिरूपणम् | ३९३ |
| **अध्यायः १२.** | |
| शूद्रस्य दंडादिविचारः | ३९४ |
| **अध्यायः १३.** | |
| साक्षिप्रसंगेन सत्यासत्यकथनविचारः | ३९६ |
| **अध्यायः १४.** | |
| वर्णचतुष्टयस्याशौचविचारः | ३९७ |
| **अध्यायः १५.** | |
| श्राद्धविचारः ... | ३९८ |
| **अध्यायः १६.** | |
| अध्ययनानध्यायविचारः | ३९९ |
| **अध्यायः १७.** | |
| ब्राह्मणस्य प्रतिग्रहान्नभोजनादिविचारः | ४०१ |
| **अध्यायः १८.** | |
| स्त्रीणां सदाचारविचारः | ४०२ |
| **अध्यायः १९.** | |
| निषिद्धाचरणप्रायश्चित्तविचारः | ४०३ |

| विषयाः । | पृष्ठांकाः । |
|---|---|
| **अध्यायः २०.** | |
| चतुष्षष्टियातनास्थानेषु दुःखान्यनुभूयात्रोत्पन्नानां चिह्नादिविचारः | ४०४ |
| **अध्यायः २१.** | |
| पंक्तिबाह्यद्विजादिकथनम् | ४०५ |
| **अध्यायः २२.** | |
| पतितनिरूपणम् ... | ४०६ |
| **अध्यायः २३.** | |
| ब्राह्मणहनने प्रायश्चित्तविचारः | ४०७ |
| **अध्यायः २४.** | |
| सुरापानादिप्रायश्चित्तनिरूपणम् ... | ४०८ |
| **अध्यायः २५.** | |
| रहस्यप्रायश्चित्तनिरूपणम् | ४१० |
| **अध्यायः २६.** | |
| अवकीर्णिनो विचारः | ४११ |
| **अध्यायः २७.** | |
| कृच्छ्रव्याख्यानम् ... | ४१२ |
| **अध्यायः २८.** | |
| चांद्रायणविधिनिरूपणम् | ४[illegible] |
| **अध्यायः २९.** | |
| ऋक्थविभागनिरूपणम् | ४[illegible] |
| **शातातपस्मृतिः १७.** | |
| **अध्यायः १.** | |
| पातकान्नरकादिषु यातना उपभुज्य भूमावुत्पन्नानां देहचिह्ननिरूपणम् | ४[illegible] |
| **अध्यायः २.** | |
| ब्रह्महा नरकादियातना उपभुज्य कुष्ठी भवति तस्य प्रायश्चित्तम्, तथैव गवादिहननेष्वपिप्रायश्चित्तानि | ४[illegible] |
| **अध्यायः ३.** | |
| सुरापादिसभापक्षपातिपर्यन्तं प्रायश्चित्तम् | ४[illegible] |

विषयाः। पृष्ठांकाः।

अध्यायः ४.

कुलघ्नादिनानाविधद्रव्यचोर-पर्यन्तं प्रायश्चित्तम् ४२८

अध्यायः ५.

मातृगाम्यादिनिषिद्धस्त्रीगा-मिनां प्रायश्चित्तम् ४३२

अध्यायः ६.

अश्वसूकरशृंग्यादिहतानां गतिहीनानां संततिनाशकत्वात् तदुद्धाराय प्रायश्चित्तविधिनिरूपणम् ४३६

वासिष्ठस्मृतिः १८.

अध्यायः १.

पुरुषनिःश्रेयसार्थं धर्मजिज्ञासा, धर्माचरणे आर्यावर्तप्रदेशस्य महत्त्वकथनम्, ब्राह्मणप्राशस्त्यकथनञ्च ४४२

अध्यायः २.

वर्णत्रयस्य द्विजत्वकथनम्, अध्ययनावश्यकत्वकथनं जीविकाविचारकथनञ्च ४४३

विषयाः। पृष्ठांकाः।

अध्यायः ३.

वेदमनधीयानस्य द्विजस्य शूद्रवत् स्थितिः, आततायी ब्राह्मणश्चेत्तद्धनने न दोषः, धर्मकथने अधिकारिणः, आचमनप्रकारः, भूम्यादीनां शुद्धिनिरूपणञ्च ४४७

अध्यायः ४.

संस्कारविशेषतश्चातुर्वर्ण्यकरणम्, देवतातिथिपूजायां पशुवधे न दोषः, अशौचविचारश्च ४५१

अध्यायः ५.

स्त्रीणां स्वातंत्र्याभावकथनम्, रजस्वलास्त्रीणां नियमाः ४५३

अध्यायः ६.

आचारप्रशंसनम्, सामान्यतो ब्राह्मणाचारकथनञ्च ४५५

अध्यायः ७.

सामान्यतो ब्रह्मचर्यविधिनिरूपणम् ४५८

| विषयाः । | पृष्ठांकाः । |
|---|---|
| **अध्यायः ८.** | |
| विवाहयोग्यस्त्रीकथनम्, विवाहानंतरं पालनीयधर्माणां संक्षेपेण निरूपणम् | ४५८ |
| **अध्यायः ९.** | |
| वानप्रस्थधर्माणां संक्षेपेण वर्णनम् | ४६० |
| **अध्यायः १०.** | |
| यतिनियमनिरूपणम् | ४६० |
| **अध्यायः ११.** | |
| षट्कर्मणो द्विजस्यातिथिभोजनविचारः श्राद्धविचारः द्विजानामुपनयनकालदंडाजिनवस्त्रभिक्षादिविचारश्च | ४६२ |
| **अध्यायः १२.** | |
| स्नातकव्रतानां निरूपणम् | ४६६ |
| **अध्यायः १३.** | |
| स्वाध्यायोपाकर्मनिरूपणम् | ४६८ |
| **अध्यायः १४.** | |
| भोज्याभोज्यविषये विचारः | ४७० |
| **अध्यायः १५.** | |
| पुत्रदानप्रतिग्रहविचारः | ४७२ |
| **अध्यायः १६.** | |
| राजव्यवहारसाक्षिप्रभृतिविचारः ... | ४७५ |
| **अध्यायः १७.** | |
| पुत्रजननात्पितृऋणमोचनं तत्संबंधेन द्वादशपुत्रकथनम्, दायग्रहीतृविचारश्च | ४७६ |
| **अध्यायः १८.** | |
| प्रातिलोम्येनोत्पन्नानां चंडालादीनां विचारः, शूद्रस्य धर्मोपदेशानर्हत्वादिविचारश्च | ४८० |
| **अध्यायः १९.** | |
| संक्षेपेण राज्ञो धर्मनिरूपणम् | ४८१ |
| **अध्यायः २०.** | |
| संक्षेपतो ब्रह्मघ्नादीनां प्रायश्चित्तनिरूपणम् | ४८३ |
| **अध्यायः २१.** | |
| वर्णत्रयस्य ब्राह्मणीगमन उभयोः प्रायश्चित्तविधिकथनम् | ४८६ |


इत्यष्टादशस्मृत्यनुक्रमणिका समाप्ता ।

श्रीः ।

# अष्टादशस्मृतयः ।

श्रीयोगिजनवल्लभाय नमः ।



## अथ अत्रिस्मृतिः १.

हुताग्निहोत्रमासीनमत्रिं वेदविदां वरम् ॥
सर्वशास्त्रविधिज्ञं तमृषिभिश्च नमस्कृतम् ॥ १ ॥
नमस्कृत्य च ते सर्वे इदं वचनमब्रुवन् ॥
हितार्थं सर्वलोकानां भगवन्कथयस्व नः ॥ २ ॥

अत्रिरुवाच ॥

वेदशास्त्रार्थतत्त्वज्ञा यन्मे पृच्छथ संशयम् ॥
तत्सर्वं संप्रवक्ष्यामि यथादृष्टं यथाश्रुतम् ॥ ३ ॥
सर्वतीर्थान्युपस्पृश्य सर्वान्देवान्प्रणम्य च ॥
जप्त्वा तु सर्वसूक्तानि सर्वशास्त्रानुसारतः ॥ ४ ॥
सर्वपापहरं दिव्यं सर्वसंशयनाशनम् ॥
चतुर्णामपि वर्णानामत्रिः शास्त्रमकल्पयत् ॥ ५ ॥
ये च पापकृतो लोके ये चान्ये धर्मदूषकाः ॥

---

१ अथात्रिस्मृत्युपक्रमः ।

१ पाठान्तरं "नित्यं"

सर्वपापैः प्रमुच्यंते श्रुत्वेदं शास्त्रमुत्तमम् ॥ ६ ॥
तस्मादिदं वेदविद्भिरध्येतव्यं प्रयत्नतः ॥
शिष्येभ्यश्च प्रवक्तव्यं सद्वृत्तेभ्यश्च धर्मतः ॥ ७ ॥
अकुलीने ह्यसद्वृत्ते जडे शूद्रे शठे द्विजे ॥
एतेष्वेव न दातव्यमिदं शास्त्रं द्विजोत्तमैः ॥ ८ ॥
एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत् ॥
पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वा ह्यनृणी भवेत् ॥ ९ ॥
एकाक्षरप्रदातारं यो गुरुं नाभिमन्यते ॥
शुनां योनिशतं गत्वा चाण्डालेष्वभिजायते ॥ १० ॥
वेदं गृहीत्वा यः कश्चिच्छास्त्रं चैवावमन्यते ॥
स सद्यः पशुतां याति संभवानेकविंशतिम् ॥ ११ ॥
स्वानि कर्माणि कुर्वाणा दूरे संतोऽपि मानवाः ॥
प्रिया भवंति लोकस्य स्वे स्वे कर्मण्युपस्थिताः ॥ १२ ॥
कर्म विप्रस्य यजनं दानमध्ययनं तपः ॥
प्रतिग्रहोऽध्यापनं च याजनं चेति वृत्तयः ॥ १३ ॥
क्षत्रियस्यापि यजनं दानमध्ययनं तपः ॥
शस्त्रोपजीवनं भूतरक्षणं चेति वृत्तयः ॥ १४ ॥
दानमध्ययनं वार्ता यजनं चेति वै विशः ॥
शूद्रस्य वार्ता शुश्रूषा द्विजानां कारुकर्म च ॥ १५ ॥

"पाठान्तरे ...कमिष्यति..."

तदेतत्कर्माभिहितं संस्थिता यत्र वर्णिनः ॥
बहुमानमिह प्राप्य प्रयांति परमां गतिम् ॥ १६ ॥
ये व्यपेताः स्वधर्माच्च परधर्मेष्ववस्थिताः ॥
तेषां शास्तिकरो राजा स्वर्गलोके महीयते ॥ १७ ॥
आत्मीये संस्थितो धर्मे शूद्रोऽपि स्वर्गमश्नुते ॥
परधर्मो भवेत्याज्यः सुरूपपरदारवत् ॥ १८ ॥
वध्यो राज्ञा स वै शूद्रो जपहोमपरश्च यः ॥
यतो राष्ट्रस्य हंतासौ यथा वह्नेश्च वै जलम् ॥ १९ ॥
प्रतिग्रहोऽध्यापनं च तथाऽविक्रेयविक्रयः ॥
याज्यं चतुर्भिरप्येतैः क्षत्रविट्पतनं स्मृतम् ॥ २० ॥
सद्यः पतति मांसेन लाक्षया लवणेन च ॥
त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयी ॥ २१ ॥
अव्रताश्चानधीयाना यत्र भैक्ष्यचरा द्विजाः ॥
तं ग्रामं दंडयेद्राजा चौरभक्तददंडवत् ॥ २२ ॥
विद्वद्भोज्यमविद्वांसो येषु राष्ट्रेषु भुंजते ॥
तेष्वनावृष्टिमिच्छंति महद्वा जायते भयम् ॥ २३ ॥
ब्राह्मणान्वेदविदुषः सर्वशास्त्रविशारदान् ॥
तत्र वर्षति पर्जन्यो यत्रैतान्पूजयेन्नृपः ॥ २४ ॥
त्रयो लोकास्त्रयो वेदा आश्रमाश्च त्रयोऽग्नयः ॥

---

१ शास्तिः शासनम् । २ तेषु राष्ट्रेषु ।

3 पाठान्तरं "नृपेषु धर्मोऽभिहितः"
4 " "ये त्यक्ताः स्वधर्मस्य परधर्मे व्यवस्थिताः"
5 " "देशे त्वनावृष्टि"

एतेषां रक्षणार्थाय संसृष्टा ब्राह्मणाः पुरा ॥ २५ ॥
उभे संध्ये समाधाय मौनं कुर्वंति ते द्विजाः ॥
दिव्यवर्षसहस्राणि स्वर्गलोके महीयते ॥ २६ ॥
य एवं कुरुते राजा गुणदोषपरीक्षणम् ॥
यशः स्वर्गं नृपत्वं च पुनः कोशं च सोऽर्जयेत् ॥ २७ ॥
दुष्टस्य दंडः सुजनस्य पूजा न्यायेन कोशस्य च संप्रवृद्धिः ॥
अपक्षपातोऽर्थिषु राष्ट्ररक्षा पंचैव यज्ञाः कथिता नृपाणाम् ॥ २८ ॥
यत्प्रजापालने पुण्यं प्राप्नुवंतीह पार्थिवाः ॥
नतु क्रतुसहस्रेण प्राप्नुवंति द्विजोत्तमाः ॥ २९ ॥
अलाभे देवखातानां ह्रदेषु सरसीषु च ॥
उद्धृत्य चतुरः पिंडान्पारक्ये स्नानमाचरेत् ॥ ३० ॥
वसा शुक्रमसृङ्मज्जा मूत्रं विट् कर्णविण्नखाः ॥
श्लेष्मास्थि दूषिका स्वेदो द्वादशैते नृणां मलाः ॥ ३१ ॥
षण्णां षण्णां क्रमेणैव शुद्धिरुक्ता मनीषिभिः ॥
मृद्वारिभिश्च पूर्वेषामुत्तरेषां तु वारिणा ॥ ३२ ॥
शौचमंगलानायासा अनसूयाऽस्पृहा दमः ॥
लक्षणानि च विप्रस्य तथा दानं दयापि च ॥ ३३ ॥

१ यस्य राज्ञो राष्ट्रेषु इति शेषः । २ स राजा इति शेषः । ३ परकीये जलस्थाने ।

४ पाठान्तर ... ५ ,, समूर्छ्येत

अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिंदितैः ॥
आचारेषु व्यवस्थानं शौचमित्यभिधीयते ॥ ३४ ॥ (34)
प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम् ॥
एतद्धि मंगलं प्रोक्तमृषिभिर्धर्मवादिभिः ॥ ३५ ॥ (35)
शरीरं पीड्यते येन शुभेन ह्यशुभेन वा ॥
अत्यंतं तन्न कुर्वीत अनायासः स उच्यते ॥ ३६ ॥ (36)
न गुणान्गुणिनो हंति स्तौति चान्यान्गुणानपि ॥
न हसेच्चान्यदोषांश्च साऽनसूया प्रकीर्तिता ॥ ३७ ॥
यथोत्पन्नेन कर्तव्यः संतोषः सर्ववस्तुषु ॥
न स्पृहेत्परदारेषु साऽस्पृहा च प्रकीर्तिता ॥ ३८ ॥
बाह्य आध्यात्मिके वापि दुःख उत्पादिते परैः ॥
न कुप्यति न चाहंति दम इत्यभिधीयते ॥ ३९ ॥
अहन्यहनि दातव्यमदीनेनांतरात्मना ॥
स्तोकादपि प्रयत्नेन दानमित्यभिधीयते ॥ ४० ॥
परस्मिन्बंधुवर्गे वा मित्रे द्वेष्ये रिपौ तथा ॥
आत्मवद्वर्तितव्यं हि दयैषा परिकीर्तिता ॥ ४१ ॥
यश्चैतैर्लक्षणैर्युक्तो गृहस्थोऽपि भवेद्द्विजः ॥
स गच्छति परं स्थानं जायते नेह वै पुनः ॥ ४२ ॥
इष्टापूर्तं च कर्तव्यं ब्राह्मणेनैव यत्नतः ॥
इष्टेन लभते स्वर्गं पूर्ते मोक्षो विधीयते ॥ ४३ ॥

अग्निहोत्रं तपः सत्यं वेदानां चैव पालनम् ॥
आतिथ्यं वैश्वदेवश्च इष्टमित्यभिधीयते ॥ ४४ ॥
वापीकूपतडागादिदेवतायतनानि च ॥
अन्नप्रदानमारामः पूर्तमित्यभिधीयते ॥ ४५ ॥
इष्टापूर्तं द्विजातीनां सामान्ये धर्मसाधने ॥
अधिकारी भवेच्छूद्रः पूर्ते धर्मे न वैदिके ॥ ४६ ॥
यमान्सेवेत सततं न नित्यं नियमान्बुधः ॥
यमान्पतत्यकुर्वाणो नियमान्केवलान्भजन् ॥ ४७ ॥
आनृशंस्यं क्षमा सत्यमहिंसा दानमार्जवम् ॥
प्रीतिः प्रसादो माधुर्यं मार्दवं च यमा दश ॥ ४८ ॥
शौचमिज्या तपो दानं स्वाध्यायोपस्थनिग्रहौ ॥
व्रतमौनोपवासं च स्नानं च नियमा दश ॥ ४९ ॥
प्रतिनिधिं कुशमयं तीर्थवारिषु मज्जति ॥
यमुद्दिश्य निमज्जेत अष्टभागं लभेत सः ॥ ५० ॥
मातरं पितरं वापि भ्रातरं सुहृदं गुरुम् ॥
यमुद्दिश्य निमज्जेत द्वादशांशफलं भवेत् ॥ ५१ ॥
अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिः सदा ॥
पिंडोदकक्रियाहेतोर्यस्मात्तस्मात्प्रयत्नतः ॥ ५२ ॥
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥

१ अनुपदं वक्ष्यमाणमात्राद्यतिरिक्तम् । २ निमज्जनं कारयंता । १

३ पाठभेदः "प्रतिकृतिं कुशमयीं"

ऋणमस्मिन्संनयति अमृतत्वं च गच्छति ॥ ५३ ॥
जातमात्रेण पुत्रेण पितॄणामनृणी पिता ॥
तदह्नि शुद्धिमाप्नोति नरकात्त्रायते हि सः ॥ ५४ ॥
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ॥
यजेत चाश्वमेधं च नीलं वा वृषमुत्सृजेत् ॥ ५५ ॥
कांक्षंति पितरः सर्वे नरकांतरभीरवः ॥
गयां यास्यति यः पुत्रः स नस्त्राता भविष्यति ॥ ५६ ॥
फल्गुतीर्थे नरः स्नात्वा दृष्ट्वा देवं गदाधरम् ॥
गयशीर्षं पदाक्रम्य मुच्यते ब्रह्महत्यया ॥ ५७ ॥
महानदीमुपस्पृश्य तर्पयेत्पितृदेवताः ॥
अक्षयाँल्लभते लोकान्कुलं चैव समुद्धरेत् ॥ ५८ ॥
शंकास्थाने समुत्पन्ने भक्ष्यभोज्यविवर्जिते ॥
आहारशुद्धिं वक्ष्यामि तन्मे निगदतः शृणु ॥ ५९ ॥
अक्षारलवणं रौक्षं पिबेद्ब्राह्मीं सुवर्चलाम् ॥
त्रिरात्रं शंखपुष्पीं वा ब्राह्मणः पयसा सह ॥ ६० ॥
मद्यभांडे द्विजः कश्चिदज्ञानात्पिबते जलम् ॥
प्रायश्चित्तं कथं तस्य मुच्यते केन कर्मणा ॥ ६१ ॥
पालाशबिल्वपत्राणि कुशान्पद्मान्युदुंबरम् ॥
क्वाथयित्वा पिबेदापस्त्रिरात्रेणैव शुद्ध्यति ॥ ६२ ॥

१ गंगाम् । २ इति विप्रतिपत्तौ सत्यामिति श्लोकांतशेषः ।

सायं प्रातस्तु यः संध्यां प्रमादाद्वि[1]क्रमेत्सकृत् ॥
गायत्र्यास्तु सहस्रं हि जपेत्स्नात्वा समाहितः ॥ ६
रोगाक्रांतोऽथवाऽऽयासात् स्थितः स्नानजपाद्बहिः ॥
ब्रह्मकूर्चं[2] चरेद्भक्त्या दानं दत्त्वा विशुद्ध्यति ॥ ६
गवां शृंगोदके स्नात्वा महानद्युपसंगमे ॥
समुद्रदर्शने चापि व्यालदष्टः शुचिर्भवेत् ॥ ६५ ॥
वृकश्वानशृगालैस्तु यदि दष्टस्तु ब्राह्मणः ॥
हिरण्योदकसंमिश्रं घृतं प्राश्य विशुद्ध्यति ॥ ६६
ब्राह्मणी तु शुना दष्टा जंबुकेन वृकेण वा ॥
उदितं ग्रहनक्षत्रं दृष्ट्वा सद्यः शुचिर्भवेत् ॥ ६७ ॥
सव्रतस्तु शुना दष्टस्त्रिरात्रमुपवासयेत् ॥
सघृतं यावकं प्राश्य व्रतशेषं समापयेत् ॥ ६८ ॥
मोहात्प्रमादात्संलोभाद्व्रतभंगं तु कारयेत् ॥
त्रिरात्रेणैव शुद्ध्येत पुनरेव व्रती भवेत् ॥ ६९ ॥
ब्राह्मणानां यदुच्छिष्टमश्नात्यज्ञानतो द्विजः ॥
दिनद्वयं तु गायत्र्या जपं कृत्वा विशुद्ध्यति ॥
क्षत्रियान्नं यदुच्छिष्टमश्नात्यज्ञानतो द्विजः ॥
त्रिरात्रेण भवेच्छुद्धिर्यथा क्षत्रे तथा विशि ॥ ७

१ अतिलंघयेत् । २ पंचगव्यप्राशनपूर्वकं जपविघातप्रत्यवायप्रायश्चित्तम् ।

अभोज्यान्नं तु भुक्त्वान्नं स्त्रीशूद्रोच्छिष्टमेव वा ॥
जग्ध्वा मांसमभक्ष्यं च सप्तरात्रं यवान्पिबेत् ॥ ७२ ॥
असंस्पृश्येन संस्पृष्टः स्नानं तेन विधीयते ॥
तस्य चोच्छिष्टमश्नीयात्षण्मासान्कृच्छ्रमाचरेत्॥७३॥ ७४
अज्ञानात्प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव वा ॥
पुनः संस्कारमर्हंति त्रयो वर्णा द्विजातयः ॥ ७४ ॥ ७५
वपनं मेखला दंडं भैक्ष्यचर्यं व्रतानि च ॥
निवर्तंते द्विजातीनां पुनःसंस्कारकर्माणि ॥ ७५ ॥ ७६
गृहशुद्धिं प्रवक्ष्यामि अंतःस्थशवदूषिताम् ॥
प्रस्याज्यं मृन्मयं भांडं सिद्धमन्नं तथैव च ॥ ७६ ॥ ७७
गृहान्निष्क्रम्य तत्सर्वं गोमयेनोपलेपयेत् ॥
गोमयेनोपलिप्याथ छागेनाघ्रापयेत्पुनः ॥ ७७ ॥ ७८
ब्राह्मैर्मंत्रैस्तु पूतं तु हिरण्यकुशवारिभिः ॥
तेनैवाभ्युक्ष्य तद्वेश्म शुध्यते नात्र संशयः ॥ ७८ ॥ ७९
राजन्यैः श्वपचैर्वापि बलाद्विचालितो द्विजः ॥
पुनः कुर्वीत संस्कारं पश्चात्कृच्छ्रत्रयं चरेत् ॥ ७९ ॥ ८०
शुना चैव तु संस्पृष्टस्तस्य स्नानं विधीयते ॥
तदुच्छिष्टं तु संप्राश्य यत्नेन कृच्छ्रमाचरेत् ॥ ८० ॥ ८१
अतः परं प्रवक्ष्यामि सूतकस्य विनिर्णयम् ॥

---

१ पूर्वभुक्तावशिष्टमन्नम् । २ छागसंबंधिना पुरीषेण ।

प्रायश्चित्तं पुनश्चैव कथयिष्याम्यतः परम् ॥ ८१ ॥
एकाहाच्छुद्ध्यते विप्रो योऽग्निवेदसमन्वितः ॥
ऽयहात्केवलवेदस्तु निर्गुणो दशभिर्दिनैः ॥ ८२ ॥
व्रतिनः शास्त्रपूतस्य आहिताग्नेस्तथैव च ॥
राज्ञां तु सूतकं नास्ति यस्य चेच्छंति ब्राह्मणाः ॥ ८३
ब्राह्मणो दशरात्रेण द्वादशाहेन भूमिपः ॥
वैश्यः पंचदशाहेन शूद्रो मासेन शुद्ध्यति ॥ ८४ ॥
सपिंडानां तु सर्वेषां गोत्रजः सप्तपौरुषः ॥
पिंडांश्चोदकदानं च शावशौचं तथानुगम् ॥ ८५ ॥
चतुर्थे दशरात्रं स्यात्षडहः पंचमे तथा ॥
षष्ठे चैव त्रिरात्रं स्यात्सप्तमे ऽयहमेव वा ॥ ८६ ॥
मृतसूतके तु दासीनां पत्नीनां चानुलोमिनाम् ॥
स्वामितुल्यं भवेच्छौचं मृते भर्तरि यौनिकम् ॥ ८७
शवस्पृष्टं तृतीये तु सचैलं स्नानमाचरेत् ॥
चतुर्थे सप्तभिक्षं स्यादेष शावविधिः स्मृतः ॥ ८८ ॥
एकत्र संस्कृतानां तु मातृणामेकभोजिनाम् ॥
स्वामितुल्यं भवेच्छौचं विभक्तानां पृथक्पृथक् ॥ ८९
उष्ट्रीक्षीरमवीक्षीरं पक्वान्नं मृतसूतके ॥
याचकान्नं नवश्राद्धं भुक्त्वा चान्द्रायणं चरेत् ॥ ९०
सूतकान्नमधर्माय यस्तु प्राश्नाति मानवः ॥

त्रिरात्रमुपवासः स्यादेकरात्रं जले वसेत् ॥ ९१ ॥ ९३
महायज्ञविधानं तु न कुर्यान्मृतजन्मनि ॥
होमं तत्र प्रकुर्वीत शुष्कान्नेन फलेन वा ॥ ९४
बालस्त्वंतर्दशाहे तु पंचत्वं यदि गच्छति ॥ ९२ ॥
सद्य एव विशुद्धिः स्यान्न प्रेतं नैव सूतकम् ॥ ९३ ॥ ९५
कृतचूडे प्रकुर्वीत उदकं पिंडमेव च ॥
स्वधाकारं प्रकुर्वीत नामोच्चारणमेव च ॥ ९४ ॥ ९६
ब्रह्मचारी यतिश्चैव मंत्रे पूर्वकृते तथा ॥
यज्ञे विवाहकाले च सद्यः शौचं विधीयते ॥ ९५ ॥ ९७
विवाहोत्सवयज्ञेषु अंतरा मृतसूतके ॥
पूर्वसंकल्पितार्थस्य न दोषश्चात्रिरब्रवीत् ॥ ९६ ॥ ९८
मृतसञ्जननाद्र्ध्वं तु सूतकादौ विधीयते ॥
स्पर्शनाचमनाच्छुद्धिःसूतिकां चेन्न संस्पृशेत् ॥ ९७ ॥ ९९
पंचमेऽहनि विज्ञेयं संस्पर्शं क्षत्रियस्य तु ॥
सप्तमेऽहनि वैश्यस्य विज्ञेयं स्पर्शनं बुधैः ॥ ९८ ॥ १००
दशमेऽहनि शूद्रस्य कर्तव्यं स्पर्शनं बुधैः ॥
मासेनैवात्मशुद्धिः स्यात्सूतके मृतके तथा ॥ ९९ ॥ १०१
व्याधितस्य कदर्यस्य ऋणग्रस्तस्य सर्वदा ॥
क्रियाहीनस्य मूर्खस्य स्त्रीजितस्य विशेषतः ॥ १०० ॥ १०२
व्यसनासक्तचित्तस्य पराधीनस्य नित्यशः ॥

१ पाठांतरं "॰नादूर्ध्वं सूतकादौ"

श्राद्धत्यागविहीनस्य भस्मांतं सूतकं भवेत् ॥ १०१
द्वे कृच्छ्रे परिवित्तेस्तु कन्यायाः कृच्छ्रमेव च ॥
कृच्छ्रातिकृच्छ्रं मातुः स्यात्पितुः सांतपनंकृतम्॥१०२
कुब्जवामनषंढेषु गद्गदेषु जडेषु च ॥
जात्यंधे बधिरे मूके न दोषः परिवेदने ॥ १०३ ॥
क्लीबे देशांतरस्थे च पतिते व्रजितेऽपि वा ॥
योगशास्त्राभियुक्ते च न दोषः परिवेदने ॥ १०४ ॥
पिता पितामहो यस्य अग्रजो वापि कस्यचित् ॥
अग्निहोत्राधिकार्यस्ति न दोषः परिवेदने ॥ १०५ ॥
भार्यामरणपक्षे वा देशांतरगतेऽपि वा ॥
अधिकारी भवेत्पुत्रस्तथा पातकसंयुगे ॥ १०६ ॥
ज्येष्ठो भ्राता यदा नष्टो नित्यं रोगसमन्वितः ॥
अनुज्ञातस्तु कुर्वीत शंखस्य वचनं यथा ॥ १०७ ॥
नाग्नयः परिविंदंति न वेदा न तपांसि च ॥
न च श्राद्धं कनिष्ठो वै विना चैवाभ्यनुज्ञया ॥१०८
तस्माद्धर्मं सदा कुर्याच्छ्रुतिस्मृत्युदितं च यत् ॥
नित्यं नैमित्तिकं काम्यं यच्च स्वर्गस्य साधनम्॥१०९
एकैकं वर्द्धयेन्नित्यं शुक्ले कृष्णे च ह्रासयेत् ॥
अमावास्यां न भुंजीत एष चांद्रायणो विधिः ॥११०
एकैकं ग्रासमश्नीयात्त्र्यहाणि त्रीणि पूर्ववत् ॥

१ पाठान्तर "ग्राम:"
२ ” ...

ऽप्यहं परं च नाश्नीयादतिकृच्छ्रं तदुच्यते ॥
इत्येतत्कथितं पूर्वैर्महापातकनाशनम् ॥ १११ ॥
वेदाभ्यासरतं क्षान्तं महायज्ञक्रियापरम् ॥
न स्पृशंतीह पापानि महापातकजान्यपि ॥ ११२ ॥
वायुभक्षो दिवा तिष्ठेद्रात्रिं नीत्वाप्सु सूर्यदृक् ॥
जप्त्वा सहस्रं गायत्र्याः शुद्धिर्ब्रह्मवधादृते ॥ ११३ ॥
पद्मोदुंबरबिल्वाश्च कुशाश्वत्थपलाशकाः ॥
एतेषामुदकं पीत्वा पर्णकृच्छ्रं तदुच्यते ॥ ११४ ॥
पंचगव्यं च गोक्षीरं दधि मूत्रं शकृद्घृतम् ॥
जग्ध्वा परेऽह्न्युपवसेत्कृच्छ्रं सांतपनं स्मृतम् ॥ ११५ ॥
पृथक्सांतपनैर्द्रव्यैः षडहः सोपवासकः ॥
सप्ताहेन तु कृच्छ्रोऽयं महासांतपनं स्मृतम् ॥ ११६ ॥
ऽयहं सायं ऽयहं प्रातस्त्र्यहं भुंक्ते त्वयाचितम् ॥
ऽयहं परं च नाश्नीयात्प्राजापत्यो विधिः स्मृतः ॥ ११७ ॥
सायं तु द्वादश ग्रासाः प्रातः पंचदश स्मृताः ॥
अयाचितैश्चतुर्विंशं परेऽस्त्वनशनं स्मृतम् ॥ ११८ ॥
कुक्कुटांडप्रमाणं स्याद्यावद्वाऽस्य विशेन्मुखे ॥
एतद्ग्रासं विजानीयाच्छुद्ध्यर्थं कायशोधनम् ॥ ११९ ॥
ऽयहमुष्णं पिबेदापस्त्र्यहमुष्णं पिबेत्पयः ॥
ऽयहमुष्णं घृतं पीत्वा वायुभक्षो दिनत्रयं ॥ १२० ॥

षट्पलानि पिबेदापस्त्रिपलं तु पयः पिबेत् ॥
पलमेकं तु वै सर्पिस्तप्तकृच्छ्रं विधीयते ॥ १२१ ॥
त्र्यहं तु दधिना भुंक्ते त्र्यहं भुंक्ते च सर्पिषा ॥
क्षीरेण तु त्र्यहं भुंक्ते वायुभक्षो दिनत्रयम् ॥ १२२ ॥
त्रिपलं दधि क्षीरेण पलमेकं तु सर्पिषा ॥
एतदेव व्रतं पुण्यं वैदिकं कृच्छ्रमुच्यते ॥ १२३ ॥
एकभुक्तेन नक्तेन तथैवायाचितेन च ॥
उपवासेन चैकेन पादकृच्छ्रं प्रकीर्तितम् ॥ १२४ ॥
कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम् ॥
द्वादशाहोपवासेन पराकः परिकीर्तितः ॥ १२५ ॥
पिण्याकश्चामतक्राम्बुसक्तूनां प्रतिवासरम् ॥
एकैकमुपवासः स्यात्सौम्यकृच्छ्रः प्रकीर्तितः ॥ १२६ ॥
एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम् ॥
तुलापुरुष इत्येष ज्ञेयः पञ्चदशाह्निकः ॥ १२७ ॥
कपिलायास्तु दुग्धाया धारोष्णं यत्पयः पिबेत् ॥
एष व्यासकृतः कृच्छ्रः श्वपाकमपि शोधयेत् ॥ १२८ ॥
निशायां भोजनं चैव तज्ज्ञेयं नक्तमेव तु ॥
अनादिष्टेषु पापेषु चान्द्रायणमथोदितम् ॥ १२९ ॥
अग्निष्टोमादिभिर्यज्ञैरिष्टैर्द्विगुणदक्षिणैः ॥
यत्फलं समवाप्नोति तथा कृच्छ्रैस्तपोधनाः ॥ १३० ॥

१ पाठान्तर "पिण्याकं दधि सक्तूनां गोरसं प्रतिवासरे"
२ " " "कपिलागोरस्तु"

वेदाभ्यासरतः क्षांतो नित्यं शास्त्राण्यवेक्षयेत् ॥
शौचमृद्वार्थविरतो गृहस्थोऽपि हि मुच्यते ॥ १३१ ॥
उक्तमेतद्विजातीनां महर्षे श्रूयतामिति ॥
अतः परं प्रवक्ष्यामि स्त्रीशूद्रपतनानि च ॥ १३२ ॥
जपस्तपस्तीर्थयात्रा प्रव्रज्या मंत्रसाधनम् ॥
देवताराधनं चैव स्त्रीशूद्रपतनानि षट् ॥ १३३ ॥
जीवद्भर्तरि या नारी उपोष्य व्रतचारिणी ॥
आयुष्यं हरते भर्तुः सा नारी नरकं व्रजेत् ॥ १३४ ॥
तीर्थस्नानार्थिनी नारी पतिपादोदकं पिबेत् ॥
शंकरस्यापि विष्णोर्वा प्रयाति परमं पदम् ॥ १३५ ॥
जीवद्भर्तरि वामांगी मृते चापि सुदक्षिणे ॥
श्राद्धे यज्ञे विवाहे च पत्नी दक्षिणतः सदा ॥ १३६ ॥
सोमः शौचं ददौ तासां गंधर्वाश्च तथांगिराः ॥
पावकः सर्वमेध्यत्वं मेध्यत्वं योषितां सदा ॥ १३७ ॥
जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते ॥
विद्यया याति विप्रत्वं श्रोत्रियस्त्रिभिरेव च ॥ १३८ ॥
वेदशास्त्राण्यधीते यः शास्त्रार्थं च निबोधयेत् ॥
तदासौ वेदवित्प्रोक्तो वचनं तस्य पावनम् ॥ १३९ ॥
एकोऽपि वेदविद्धर्मं यं व्यवस्येद्विजोत्तमः ॥
स ज्ञेयः परमो धर्मो नाज्ञानामयुतायुतैः ॥ १४० ॥

पावका इव दीप्यंते जपहोमैर्द्विजोत्तमाः ॥
प्रतिग्रहेण नश्यंति वारिणा इव पावकः ॥ १४१ ॥
तान्प्रतिग्रहजान्दोषान्प्राणायामैर्द्विजोत्तमाः ॥
नाशयंति हि विद्वांसो वायुर्मेघानिवांबरे ॥ १४२ ॥
भुक्तमात्रो यदा विप्र आर्द्रपाणिस्तु तिष्ठति ॥
लक्ष्मीर्बलं यशस्तेज आयुश्चैव प्रहीयते ॥ १४३ ॥
यस्तु भोजनशालायामासनस्थ उपस्पृशेत् ॥
तस्यान्नं नैव भोक्तव्यं भुक्त्वा चांद्रायणं चरेत् ॥ १४४ ॥
पात्रोपरि स्थिते पात्रे यस्तु स्थाप्य उपस्पृशेत् ॥
तस्यान्नं नैव भोक्तव्यं भुक्त्वा चांद्रायणं चरेत् ॥ १४५ ॥
अश्रद्धया च यद्दत्तं विप्रेभ्यो दैविके क्रतौ ॥
न देवास्तृप्तिमायांति दातुर्भवति निष्फलम् ॥ १४६ ॥
हस्तं प्रक्षालयित्वा यः पिबेद्भुक्त्वा द्विजोत्तमः ॥
तदन्नमसुरैर्भुक्तं निराशाः पितरो गताः ॥ १४७ ॥
नास्ति वेदात्परं शास्त्रं नास्ति मातुः परो गुरुः ॥
नास्ति दानात्परं मित्रमिह लोके परत्र च ॥ १४८ ॥
अपात्रेष्वपि यद्दत्तं दहत्यासप्तमं कुलम् ॥
हव्यं देवा न गृह्णंति कव्यं च पितरस्तथा ॥ १४९ ॥
आयसेन तु पात्रेण यदन्नमुपदीयते ॥
श्वानविष्ठासमं भुंक्ते दाता च नरकं व्रजेत् ॥ १५० ॥

पैत्तलेन तु पात्रेण दीयमानं विचक्षणः ॥
न दद्याद्वामहस्तेन आयसेन कदाचन ॥ १५१ ॥
मृन्मयेषु च पात्रेषु यः श्राद्धे भोजयेत्पितॄन् ॥
अन्नदाता च भोक्ता च व्रजेतां नरकं च तौ ॥१५२ ॥
अभावे मृन्मये दद्यादनुज्ञातस्तु तैर्द्विजैः ॥
तेषां वचः प्रमाणं स्याद्यदन्नं चातिरिक्तकम् ॥१५३॥
सौवर्णायसताम्रेषु कांस्यरौप्यमयेषु च ॥
भिक्षादातुर्न धर्मोऽस्ति भिक्षुर्भुक्ते तु किल्बिषम्॥१५४॥
न च कांस्येषु भुंजीयादापद्यपि कदाचन ॥
मलाशाः सर्व एवैते यतयः कांस्यभोजनाः ॥ १५५ ॥
कांस्यकस्य च यत्पात्रं गृहस्थस्य तथैव च ॥
कांस्यभोजी यतिश्चैव प्राप्नुयात्किल्बिषं तयोः॥१५६॥

अत्राप्युदाहरंति ।

सौवर्णायसताम्रेषु कांस्यरौप्यमयेषु च ॥
भुंजन्भिक्षुर्न दुष्येत दुष्येच्चैव परिग्रहे ॥ १५७ ॥
यतिहस्ते जलं दद्याद्भिक्षां दद्यात्पुनर्जलम् ॥
तद्भैक्षं मेरुणा तुल्यं तज्जलं सागरोपमम् ॥ १५८ ॥
चरेन्माधुकरीं वृत्तिमपि म्लेच्छकुलादपि ॥
एकान्नं नैव भोक्तव्यं बृहस्पतिसमो यदि ॥ १५९ ॥

अनापदि चरेद्यस्तु सिद्धं भैक्षं गृहे वसन् ॥
दशरात्रं पिबेद्ब्रह्ममापस्तु ऽयहमेव च ॥ १६० ॥
गोमूत्रेण तु संमिश्रं यावकं घृतपाचितम् ॥
एतद्ब्रह्ममिति प्रोक्तं भगवानत्रिरब्रवीत् ॥ १६१ ॥
ब्रह्मचारी यतिश्चैव विद्यार्थी गुरुपोषकः ॥
अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः ॥ १६२ ॥
षण्मासान्कामयेन्मर्त्यो गुर्विणीमेव वै स्त्रियम् ॥
आदंतजननादूर्ध्वमेवं धर्मो न हीयते ॥ १६३ ॥
ब्रह्महा प्रथमं चैव द्वितियं गुरुतल्पगः ॥
तृतीयं तु सुरापेयं चतुर्थं स्तेयमेव च ॥ १६४ ॥
पापानां चैव संसर्गं पंचमं पातकं महत् ॥ १६५ ॥
एषामेव विशुद्ध्यर्थं चरेत्कृच्छ्राण्यनुक्रमात् ॥
त्रीणि वर्षाण्यकामश्चेद्ब्रह्महत्या पृथक्पृथक् ॥ १६६ ॥
अर्द्धं तु ब्रह्महत्यायाः क्षत्रियेषु विधीयते ॥
षड्भागो द्वादशश्चैव विट्शूद्रयोस्तथा भवेत् ॥ १६७ ॥
त्रीन्मासान्नक्तमश्नीयाद्भूमौ शयनमेव च ॥
स्त्रीघाती शुद्ध्यतेऽप्येवं चरेत्कृच्छ्राब्दमेव वा ॥ १६८ ॥
रजकः शैलुषश्चैव वेणुकर्मोपजीवनः ॥
एतेषां यस्तु भुंक्ते वै द्विजश्चान्द्रायणं चरेत् ॥ १६९ ॥

१ अर्धस्विन्नं यवादि ।

२ पाठान्तरं "संमिश्रमेव च" ४ पाठान्तरं " स्याद्ब्रह्महत्या "
३ " " विधीयते "
५ "

सर्वांत्यजानां गमने भोजने संप्रवेशने ॥
पराकेण विशुद्धिः स्याद्भगवानत्रिरब्रवीत् ॥ १७० ॥
चांडालभांडे यत्तोयं पीत्वा चैव द्विजोत्तमः ॥
गोमूत्रयावकाहारः सप्तषट्त्रिद्व्यहान्यपि ॥ १७१ ॥
संस्पृष्टं यस्तु पक्वान्नमंत्यजैर्वाप्युदक्यया ॥
अज्ञानाद्ब्राह्मणोऽश्नीयात्प्राजापत्यार्धमाचरेत् ॥ १७२ ॥
चांडालान्नं यदा भुंक्ते चातुर्वर्ण्यस्य निष्कृतिः ॥
चांद्रायणं चरेद्विप्रः क्षत्रः सांतपनं चरेत् ॥ १७३ ॥
षड्रात्रमाचरेद्वैश्यः पंचगव्यं तथैव च ॥
त्रिरात्रमाचरेच्छूद्रो दानं दत्त्वा विशुद्ध्यति ॥ १७४ ॥
ब्राह्मणो वृक्षमारूढश्चांडालो मूलसंस्पृशः ॥
फलान्यत्ति स्थितस्तत्र प्रायश्चित्तं कथं भवेत् ॥ १७५ ॥
ब्राह्मणान्समनुप्राप्य सवासाः स्नानमाचरेत् ॥
नक्तभोजी भवेद्विप्रो घृतं प्राश्य विशुद्ध्यति ॥ १७६ ॥
एकं वृक्षं समारूढश्चंडालो ब्राह्मणस्तथा ॥
फलान्यत्ति स्थितस्तत्र प्रायश्चित्तं कथंभवेत् ॥ १७७ ॥
ब्राह्मणान्समनुज्ञाप्य सवासाः स्नानमाचरेत् ॥
अहोरात्रोषितो भूत्वा पंचगव्येन शुद्ध्यति ॥ १७८ ॥
एकशाखासमारूढश्चंडालो ब्राह्मणो यदा ॥
फलान्यत्ति स्थितस्तत्र प्रायश्चित्तं कथं भवेत् ॥ १७९

गतो "सप्तत्रिद्व्यहान्यपि"
" "ज्ञाप्य"

त्रिरात्रोपोषितो भूत्वा पंचगव्येन शुद्धयति ॥
स्त्रियो म्लेच्छस्य संपर्काच्छुद्धिः सांतपने तथा ॥ १८० ॥
तप्तकृच्छ्रं पुनः कृत्वा शुद्धिरेषाऽभिधीयते ॥ १८१ ॥
स वर्तेत यथा भार्यां गत्वा म्लेच्छस्य संगताम् ॥
सचैलं स्नानमादाय घृतस्य प्राशनेन च ॥ १८२ ॥
संगृहीतामपत्यार्थमन्यैरपि तथा पुनः ॥ १८३ ॥
चंडालम्लेच्छश्वपचकपालव्रतधारिणः ॥
अकामतः स्त्रियो गत्वा पराकेण विशुद्धयते ॥ १८४ ॥
कामतस्तु प्रसूतां वा तत्समो नात्र संशयः ॥
स एव पुरुषस्तत्र गर्भो भूत्वा प्रजायते ॥ १८५ ॥
तैलाभ्यक्तो घृताभ्यक्तो विण्मूत्रं कुरुते द्विजः ॥
तैलाभ्यक्तो घृताभ्यक्तश्चंडालं स्पृशते द्विजः ॥
अहोरात्रोषितो भूत्वा पंचगव्येन शुद्धयति ॥ १८६ ॥
केशकीटनखस्नायु अस्थिकण्टकमेव च ॥
स्पृष्ट्वा नद्युदके स्नात्वा घृतं प्राश्य विशुद्धयति ॥ १८७ ॥
मत्स्यास्थि जंबुकास्थीनि नखशुक्तिकपर्दिकाः ॥
हेमतप्तं[1] घृतं पीत्वा तत्क्षणादेव शुद्धयति ॥ १८८ ॥
गोकुले कंदुशालायां[2] तैलचक्रेक्षुयंत्रयोः ॥
अमीमांस्यानि शौचानि स्त्रीणां च व्याधितस्य च ॥ १८९ ॥

१ स्वर्णतप्तमिति बहुत्र पाठः । २ मद्यस्वेदनशालायाम् ( भट्टी ) इति प्रसिद्धायामित्यर्थः ।

न स्त्री दुष्यति जारेण ब्राह्मणो वेदकर्मणा ॥
नापो मूत्रपुरीषाभ्यां नाग्निर्दहति कर्मणा ॥ १९० ॥
पूर्वं स्त्रियः सुरैर्भुक्ताः सोमगंधर्ववह्निभिः ॥
भुंजते मानवाः पश्चान्न वा दुष्यंति कर्हिचित् ॥१९१॥
असवर्णस्तु यो गर्भः स्त्रीणां योनौ निषेच्यते ॥
अशुद्धा सा भवेन्नारी यावद्गर्भं न मुंचति ॥ १९२ ॥
विमुक्ते तु ततः शल्ये रजश्चापि प्रदृश्यते ॥
तदा सा शुद्ध्यते नारी विमलं काञ्चनं यथा ॥१९३॥
स्वयं विप्रतिपन्ना या यदि वा विप्रतारिता ॥
बलान्नारी प्रभुक्ता वा चौरभुक्ता तथापि वा ॥ १९४ ॥
न त्याज्या दूषिता नारी न कामोऽस्या विधीयते ॥
ऋतुकाल उपासीत पुष्पकालेन शुद्ध्यति ॥ १९५ ॥
रजकश्चर्मकारश्च नटो बुरुड एव च ॥
कैवर्तमेदभिल्लाश्च सप्तैते अंत्यजाः स्मृताः ॥ १९६ ॥
एतान्गत्वा स्त्रियो मोहाद्भुक्त्वा च प्रतिगृह्य च ॥
कृच्छ्राब्दमाचरेज्ज्ञानादज्ञानादेव तद्द्वयम् ॥ १९७ ॥
सकृद्भुक्ता तु या नारी म्लेच्छैश्च पापकर्मभिः ॥
प्राजापत्येन शुद्ध्येत ऋतुप्रस्रवणेन च ॥ १९८ ॥
बलोद्धृता स्वयं वापि परप्रेरितया यदि ॥
सकृद्भुक्ता तु या नारी प्राजापत्येन शुद्ध्यति ॥ १९९ ॥

पाठांतरे " ताय " " नीलकान्तः " ...

प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत् ॥
न तेन तद्व्रतं तासां विनश्यति कदाचन ॥ २०० ॥
मद्यसंस्पृष्टकुंभेषु यत्तोयं पिबति द्विजः ॥
कृच्छ्रपादेन शुद्धयेत पुनः संस्कारमर्हति ॥ २०१ ॥
अंत्यजस्थास्तु ये वृक्षा बहुपुष्पफलोपगाः ॥
उपभोग्यास्तु ते सर्वे पुष्पेषु च फलेषु च ॥ २०२ ॥
चंडालेन तु संस्पृष्टं यत्तोयं पिबति द्विजः ॥
कृच्छ्रपादेन शुद्धयेत आपस्तंबोऽब्रवीन्मुनिः ॥ २०३ ॥
श्लेष्मोपानहविण्मूत्रस्त्रीरजोमद्यमेव च ॥
एभिः संदूषिते कूपे तोयं पीत्वा कथं विधिः ॥ २०४ ॥
एकं द्व्यहं त्र्यहं चैव द्विजातीनां विशोधनम् ॥
प्रायश्चित्तं पुनश्चैव नक्तं शूद्रस्य दापयेत् ॥ ॥ २०५ ॥
सद्यो वांते सचैलं तु विप्रस्तु स्नानमाचरेत् ॥
पर्युषिते त्वहोरात्रमतिरिक्ते दिनत्रयम् ॥ २०६ ॥
शिरःकंठोरुपादे च सुरया यस्तु लिप्यते ॥
दशषट्त्रितयैकाहं चरेदेवमनुक्रमात् ॥ २०७ ॥

अत्राप्युदाहरंति ।

प्रमादान्मद्यपसुरां सकृत्पीत्वा द्विजोत्तमः ॥
गोमूत्रयावकाहारो दशरात्रेण शुद्धयति ॥ २०८ ॥
मद्यपस्य निषादस्य यस्तु भुंक्ते द्विजोत्तमः ॥

न देवा भुंजते तस्य न पिबंति हविर्जलम् ॥ २०९ ॥
चितिभ्रष्टा तु या नारी ऋतुभ्रष्टा च व्याधिता ॥
प्राजापत्येन शुद्ध्येत ब्राह्मणानां तु भोजनात् ॥२१०॥
ये च प्रव्राजिता विप्राः प्रव्रज्याग्निजलावहाः ॥
अनाशकान्निवर्तंते चिकीर्षंति गृहस्थितिम् ॥ २११ ॥
धारयेत्त्रीणि कृच्छ्राणि चांद्रायणमथापि वा ॥
जातिकर्मादिकं प्रोक्तं पुनः: संस्कारमर्हति ॥ २१२ ॥
न शौचं नोदकं नाश्रु नापवादानुकंपने ॥
ब्रह्मदंडहतानां तु न कार्यं कटधारणम् ॥ २१३ ॥
स्नेहं कृत्वा भयादिभ्यो यस्त्वेतानि समाचरेत् ॥
गोमूत्रयावकाहारः कृच्छ्रमेकं विशोधनम् ॥ २१४ ॥
वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः ॥
आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनांबुभिः ॥ २१५ ॥
तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसंचयः ॥
तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमाचरेत् ॥ २१६ ॥
यस्यैकापि गृहे नास्ति धेनुर्वत्सानुचारिणी ॥
मंगलानि कुतस्तस्य कुतस्तस्य तमःक्षयः ॥ २१७ ॥
अतिदोहातिवाहाभ्यां नासिकाभेदनेन वा ॥
नदीपर्वतसंरोधे मृते पादोनमाचरेत् ॥ २१८ ॥
अष्टागवं धर्महलं षड्गवं व्यावहारिकम् ॥

चतुर्गवं नृशंसानां द्विगवं गववध्यकृत् ॥ २१९ ॥
द्विगवं वाहयेत्पादं मध्याह्ने तु चतुर्गवम् ॥
षड्गवं तु त्रिपादोक्तं पूर्णाहस्त्वष्टभिः स्मृतम् ॥२२० ॥
काष्ठलोष्टशिलागोघ्नः कृच्छ्रं सांतपनं चरेत् ॥
प्राजापत्यं चरेन्मृत्स्ना[1] अतिकृच्छ्रं तु आयसः ॥ २२१ ॥
प्रायश्चित्तेन तच्चीर्णं कुर्याद्ब्राह्मणभोजनम् ॥
अनडुत्सहितां गां च दद्याद्विप्राय दक्षिणाम् ॥ २२२ ॥
शरभोष्ट्रहयान्नागान्सिंहशार्दूलगर्दभान् ॥
हत्वा च शूद्रहत्यायाः प्रायश्चित्तं विधीयते ॥ २२३ ॥
मार्जारगोधानकुलमंडूकांश्च पतत्रिणः ॥
हत्वा त्र्यहं पिबेत्क्षीरं कृच्छ्रं वा पादिकं चरेत् ॥२२४॥
चंडालस्य च संस्पृष्टं विण्मूत्रोच्छिष्टमेव वा ॥
त्रिरात्रेण विशुद्धं हि भुक्तोच्छिष्टं समाचरेत् ॥ २२५॥
वापीकूपतडागानां दूषितानां च शोधनम् ॥
उद्धरेत्षट्शतं पूर्णं पंचगव्येन शुद्ध्यति ॥ २२६ ॥
अस्थिचर्मावसिक्तेषु खरश्वानादिदूषिते ॥
उद्धरेदुदकं सर्वं शोधनं परिमार्जनम् ॥ २२७ ॥
गोदोहने चर्मपुटे च तोयं यन्त्राकरे कारुकशिल्पिहस्ते ॥
स्त्रीबालवृद्धाचरितानि यान्यप्रत्यक्षदृष्टानि शुचीनि तानि २२८

१ मृत्तिकया मृल्लोष्टकेनेत्यर्थः । तृतीयार्थे प्रथमेयमार्षी ।
२ पाठान्तरं "विरोधिः स्यात् भुक्ते च्छिष्टं तथा चरेत् ॥"

प्राकाररोधे विषमप्रदेशे सेनानिवेशे भवनस्य दाहे ॥
अवास्यपयज्ञेषु महोत्सवेषु तेष्वेव दोषा न विकल्पनीयाः२२९॥
प्रपास्वरण्ये घटकस्य कूपे द्रोण्यां जलं कोशविनिर्गतं च ॥
श्वपाकचंडालपरिग्रहे तु पीत्वा जलं पंचगव्येन शुद्धिः २३०॥
रेतोविण्मूत्रसंस्पृष्टं कौपं यदि जलं पिबेत् ॥
त्रिरात्रेणैव शुद्धिः स्यात्कुंभे सांतपनं तथा ॥ २३१ ॥
क्लिन्नाभिन्नशवं यत्स्यादज्ञानाच्च तथोदकम् ॥
प्रायश्चित्तं चरेत्पीत्वा तप्तकृच्छ्रं द्विजोत्तमः ॥ २३२ ॥
उष्ट्रीक्षीरं खरीक्षीरं मानुषीक्षीरमेव च ॥
प्रायश्चित्तं चरेत्पीत्वा तप्तकृच्छ्रं द्विजोत्तमः ॥ २३३ ॥
वर्णबाह्येन संस्पृष्ट उच्छिष्टस्तु द्विजोत्तमः ॥
पंचरात्रोषितो भूत्वा पंचगव्येन शुद्ध्यति ॥ २३४ ॥
शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम् ॥
चर्मभांडस्थधाराभिस्तथा यंत्रोद्धृतं जलम् ॥ २३५ ॥
चंडालेन तु संस्पृष्टे स्नानमेव विधीयते ॥
उच्छिष्टस्तु च संस्पृष्टस्त्रिरात्रेणैव शुद्ध्यति ॥ २३६ ॥
आकराहृतवस्तूनि नाशुचीनि कदाचन ॥
आकराः शुचयः सर्वे वर्जयित्वा सुरालयम् ॥ २३७ ॥
भृष्टाभृष्टा यवाश्चैव तथैव चणकाः स्मृताः ॥
खर्जूरं चैव कर्पूरमन्यद्भृष्टतरं शुचि ॥ २३८ ॥

पाठान्तरे "आरण्ये" "पाठान्तरे" "दृज्ञानाद्युक्तं पिबेत्"
" " "कर्षक" " " "आकराहृते"
" " "घातक"

अमीमांस्यानि शौचानि स्त्रीभिराचरितानि च ॥
गोकुले कंदुशालायां तैलयंत्रेक्षुयंत्रयोः ॥ २३९ ॥
अदुष्टाः सततं धारा वातोद्धूताश्च रेणवः ॥ २४० ॥
बहूनामेकलग्नानामेकश्चेदशुचिर्भवेत् ॥
अशौचमेकमात्रस्य नेतरेषां कथंचन ॥ २४१ ॥
एकपंक्त्युपविष्टानां भोजनेषु पृथक्पृथक् ॥
यद्येको लभते नीलीं सर्वे तेऽशुचयः स्मृताः ॥ २४२ ॥
यस्य पट्टे पट्टसूत्रे नीलीरक्तो हि दृश्यते ॥
त्रिरात्रं तस्य दातव्यं शेषाश्चैवोपवासिनः ॥ २४३ ॥
आदित्येऽस्तमिते रात्रावस्पृश्यं स्पृशते यदि ॥
भगवन्केन शुद्धिः स्यात्ततो ब्रूहि तपोधन ॥ २४४ ॥
आदित्येऽस्तमिते रात्रौ स्पर्शहीनं दिवा जलम् ॥
तेनैव सर्वशुद्धिः स्याच्छवस्पृष्टं तु वर्जयेत् ॥ २४५ ॥
देशं कालं च यः शक्तिं पापं चावेक्ष्य यत्नतः ॥
प्रायश्चित्तं प्रकल्प्यं स्याद्यस्य चोक्ता न निष्कृतिः ॥ २४६ ॥
देवयात्राविवाहेषु यज्ञप्रकरणेषु च ॥
उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टं न विद्यते ॥ २४७ ॥
आरनालं तथा क्षीरं कंदुकं दधि सक्तवः ॥
स्नेहपक्वं च तक्रं च शूद्रस्यापि न दुष्यति ॥ २४८ ॥
आर्द्रमांसं घृतं तैलं स्नेहाश्च फलसंभवाः ॥

१ पाठान्तरं "स्पृशान्नीलीं"

अंत्यभांडस्थितास्त्वेते निष्क्रांताः शुद्धिमाप्नुयुः ॥ २४९ ॥
अज्ञानात्पिबते तोयं ब्राह्मणः शूद्रजातिषु ॥
अहोरात्रोषितः स्नात्वा पंचगव्येन शुद्धयति ॥ २५० ॥
आहिताग्निस्तु यो विप्रो महापातकवान्भवेत् ॥
अप्सु प्रक्षिप्य पात्राणि पश्चादग्निं विनिर्दिशेत् ॥ २५१ ॥
यो गृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते ॥
अन्नं तस्य न भोक्तव्यं वृथापाको हि सस्मृतः ॥ २५२ ॥
वृथापाकस्य भुंजानः प्रायश्चित्तं चरेद्द्विजः ॥
प्राणानाशु त्रिरायम्य घृतं प्राश्य विशुद्धयति ॥ २५३ ॥
वैदिके लौकिके वापि हुतोच्छिष्टे जले क्षितौ ॥
वैश्वदेवं प्रकुर्वीत पंचसूनापनुत्तये ॥ २५४ ॥
कनीयान्गुणवांश्चैव श्रेष्ठश्चेन्निर्गुणो भवेत् ॥
पूर्वं पाणिं गृहीत्वा च गृह्याग्निं धारयेद्बुधः ॥ २५५ ॥
ज्येष्ठश्चेद्यदि निर्दोषो गृह्णात्यग्निं यवीयकः ॥
नित्यं नित्यं भवेत्तस्य ब्रह्महत्या न संशयः ॥ २५६ ॥
महापातकिसंस्पृष्टः स्नानमेव विधीयते ॥
संस्पृष्टस्य यदा भुंक्ते स्नानमेव विधीयते ॥ २५७ ॥
पतितैः सह संसर्गं मासार्द्धं मासमेव वै ॥
गोमूत्रयावकाहारो मासार्द्धेन विशुद्धयति ॥ २५८ ॥
कृच्छ्रार्द्धं पतितस्यैव सकृद्भुक्त्वा द्विजोत्तमः ॥

पाठान्तरे "गृह्णीयाद्यदि मन्यते"
" "वा"

अविज्ञानाच्च तद्भुक्त्वा कृच्छ्रं सांतपनं चरेत् ॥२५९॥
पतितानां यदा भुक्तं भुक्तं चंडालवेश्मनि ॥
मासार्द्धं तु पिबद्वारि इति शातातपोऽब्रवीत् ॥ २६० ॥
गोब्राह्मणहतानां च पतितानां तथैव च ॥
अग्निना न च संस्कारः शंखस्य वचनं यथा ॥ २६१ ॥
यश्चंडालीं द्विजो गच्छेत्कथंचित्काममोहितः ॥
त्रिभिः कृच्छ्रैर्विशुद्धयेत प्राजापत्यानुपूर्वशः ॥ २६२ ॥
पतिताच्चान्नमादाय भुक्त्वा वा ब्राह्मणो यदि ॥
कृत्वा तस्य समुत्सर्गमतिकृच्छ्रं विनिर्दिशेत् ॥ २६३ ॥
अंत्यहस्तात्तु विक्षिप्तं काष्ठलोष्टतृणानि च ॥
न स्पृशेत्तु तथोच्छिष्टमहोरात्रं समाचरेत् ॥ २६४ ॥
चंडालं पतितं म्लेच्छं मद्यभांडं रजस्वलाम् ॥
द्विजः स्पृष्ट्वा न भुंजीत भुंजानो यदि संस्पृशेत् ॥२६५॥
अतः परं न भुंजीत त्यक्त्वान्नं स्नानमाचरेत् ॥
ब्राह्मणैः समनुज्ञातस्त्रिरात्रमुपवासयेत् ॥
सघृतं यावकं प्राश्य व्रतशेषं समापयेत् ॥ २६६ ॥
भुंजानः संस्पृशेद्यस्तु वायसं कुक्कुटं तथा ॥
त्रिरात्रेणैव शुद्धिः स्यादथोच्छिष्टस्त्वहेण तु ॥ २६७॥
आरूढो नैष्ठिके धर्मे यस्तु प्रच्यवते पुनः ॥
चांद्रायणं चरेन्मासमिति शातातपोऽब्रवीत् ॥ २६८ ॥

१ पाठान्तर " पतितान्नं "
२ " [illegible]

पशुवेश्याभिगमने प्राजापत्यं विधीयते ॥
गवां गैमने मनुप्रोक्तं व्रतं चांद्रायणं चरेत् ॥ २६९ ॥
अमानुषीषु गोवर्ज्यमुदक्यायामयोनिषु ॥
रेतः सिक्त्वा जले चैव कृच्छ्रं सांतपनं चरेत् ॥२७०॥
उदक्यां सूतिकां वापि अंत्यजां स्पृशते यदि ॥
त्रिरात्रेणैव शुद्धिः स्याद्विधिरेष पुरातनः ॥ २७१ ॥
संसर्गं यदि गच्छेच्चेदुदक्यया तथांत्यजैः ॥
प्रायश्चित्ती स विज्ञेयः पूर्वं स्नानं समाचरेत् ॥ २७२ ॥
एकरात्रं चरेन्मूत्रं[1] पुरीषं[2] तु दिनत्रयम् ॥
दिनत्रयं तथा पाने मैथुने पंच सप्त वा ॥ २७३ ॥

स्मृत्यंतरम् ।

{ अंगीकारेण ज्ञातीनां ब्राह्मणानुग्रहेण च ॥
धूयंते तत्र पापिष्ठा महापातकिनोऽपि ये ॥ २७४ ॥ }
भोजने तु प्रसक्तानां प्राजापत्यं विधीयते ॥
दंतकाष्ठे त्वहोरात्रमेष शौचविधिः स्मृतः ॥ २७५ ॥
रजस्वला यदा स्पृष्टा श्वानचंडालवायसैः ॥
निराहारा भवेत्तावत्स्नात्वा कालेन शुद्ध्यति ॥ २७६ ॥
रजस्वला यदा स्पृष्टा उष्ट्रजंबुकशंबरैः ॥
पंचरात्रं निराहारा पंचगव्येन शुद्ध्यति ॥ २७७ ॥

---

१ मूत्रं गोमूत्रम् । २ पुरीषं गोमयम् ।

३ पाठांतर "गमे"
" उष्ट्र जंबुक शूकरैः"

स्पृष्टा रजस्वलाऽन्योन्यं ब्राह्मण्या ब्राह्मणी च या ॥
एकरात्रं निराहारा पंचगव्येन शुद्ध्यति ॥ २७८ ॥
स्पृष्टा रजस्वलान्योन्यं ब्राह्मण्या क्षत्रियी च या ॥
त्रिरात्रेण विशुद्धिः स्याद्व्यासस्य वचनं यथा ॥२७९॥
स्पृष्टा रजस्वलान्योन्यं ब्राह्मण्या वैश्यसंभवा ॥
चतूरात्रं निराहारा पंचगव्येन शुद्ध्यति ॥ २८० ॥
स्पृष्टा रजस्वलान्योन्यं ब्राह्मण्या शूद्रसंभवा ॥
षड्रात्रेण विशुद्धिः स्याद्ब्राह्मणी कामकारतः ॥२८१ ॥
अकामतश्चरेदूर्ध्वं ब्राह्मणी सर्वतः स्पृशेत् ॥
चतुर्णामपि वर्णानां शुद्धिरेषा प्रकीर्त्तिता ॥ २८२ ॥
उच्छिष्टेन तु संस्पृष्टो ब्राह्मणो ब्राह्मणेन यः ॥
भोजने मूत्रचारे च शंखस्य वचनं यथा ॥ २८३ ॥
स्नानं ब्राह्मणसंस्पर्शे जपहोमौ तु क्षत्रिये ॥
वैश्ये नक्तं च कुर्वीत शूद्रे चैव उपोषणम् ॥ २८४ ॥
चर्मके रजके वैश्ये धीवरे नटके तथा ॥
एतान्स्पृष्ट्वा द्विजो मोहादाचामेत्प्रयतोऽपि सन्॥२८५॥
एतैः स्पृष्टो द्विजो नित्यमेकरात्रं पयः पिबेत् ॥
उच्छिष्टस्तैस्त्रिरात्रं स्याद्घृतं प्राश्य विशुद्ध्यति॥२८६॥
यस्तुच्छायां श्वपाकस्य ब्राह्मणस्त्वधिगच्छति ॥
तत्र स्नानं प्रकुर्वीत घृतं प्राश्य विशुद्ध्यति ॥ २८७ ॥

पाठान्तरे "चर्मिको रजको वैश्यो धीवरो नटः ..."

